

ISSN : 09755756

# कला - वैभव

# KALA - VAIBHAW

UGC CARE LISTED JOURNAL

संयुक्तांक 28 – 29 (वर्ष 2021–22, 2022–23)
विभागीय शोध – जर्नल (रेफरीड)



प्रधान संपादक
डॉ. मंगलानंद झा

प्राचीन भारतीय इतिहास, संस्कृति एवं पुरातत्त्व विभाग
इन्दिरा कला संगीत विश्वविद्यालय, खैरागढ़ (छ.ग.)

# संस्कृते स्तोत्र परम्परा

**डॉ0 पूर्णिमा केलकर**

सुमहत् खलु संस्कृतस्य स्तोत्रसाहित्यम्। वस्तुतः भारतीयमानसं न क्षणमपि भगवदालम्बनमन्तरेण स्थातुं प्रभवति।भक्तानां हृदयं भूयः भूयः भगवदनुग्रहं कामयते। भगवद्भक्तो हि भक्त्यावेषितेन मनसा स्वकीयमाराध्यं स्मारं स्मारं तदीयगुणवैभवमैश्वर्यं च प्रकटीकरोति। कदाचिदीशस्य विभूतिं विलोक्य चकितान्तर्मनो भूत्वा अपारं च प्रेमाणं स्मृत्वा सहजमेव जगदीशं स्तौति।कस्यचिद् भक्तस्य पष्चात्तापः पराकाष्ठां गतः भगवत्–स्तवस्यापूर्वं खलु महिमानं व्यनक्ति, चमत्करोति च सुधियो चेतांसि।तदवलोक्यताम्–

वपुः प्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान्।
नमन् मुक्तः सम्प्रत्यहमतनुरग्रेऽप्यनतिभाक्
महेश! क्षन्तव्यं तदिदमपराधद्वयमपि।

(1 मम्मट कृत काव्यप्रकाशः दशमोल्लासः काव्यलिंगालंकारः)

कश्चिद् भक्तः शिवं प्रत्याह– हे भगवन् पुरा जन्मन्यहं त्वां न प्रणतवान् अत एव इदं मया शरीरं प्राप्तम् त्वत्प्रणामे सति मुक्तिलाभेन शरीरोत्पत्तिर्नाभविष्यत्। उत्तरकालेऽपि प्रणामो न भविष्यति यतो हि इदानीमहं नमस्करोमि। नमनं कृत्वा मुक्तो भविष्यामि अतः पुनः मुक्तत्वात् देहप्राप्त्यभावात् नमनं न सम्भविष्यति। तदिदं मे अपराधद्वयं क्षम्यताम्।

स्तुतिप्रियाः वै देवाः। विश्ववाङ्मयस्य प्रथमा कृतिः ऋग्वेदः आद्यन्तं देवतानां स्तुतिवचनैः सम्पृक्तम्।दशसु मण्डलेषु ऋग्वेदे देवताविषयकाणि सूक्तानि ऋषिभिः प्रोक्तानि।आदावेव अग्नेः स्तुतिं कुर्वाणो यजमानः – अग्निमीळे पुरोहितम्। यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्। (2 ऋग्वेदः अग्निसूक्तम् 1.1) इति मन्त्रेण अग्निदेवतां स्तौति।भक्तानां पारमार्थिक–दृष्ट्या देवतानां स्तवनमिदं श्रेयस्करमस्ति । मन्त्रैः स्तूयमानाः देवा आनुकूल्यं भजन्ते प्रसीदन्ति च।अग्निस्तवनेनाग्नेः प्रसादमवाप्य यजमानः स्वकीयमभीष्टमवाप्नोति। प्रकृतौ प्रतिकणं चिच्छक्तिरूपेण देवत्वमभिव्याप्तमिति मत्वा , भक्तः चराचरं प्रकृतिमेव स्वकीयामाराध्यं मनुते। अखिलमपि वस्तुजातं परब्रह्मणोंऽशभूतमिति भावनया सर्वत्रानुस्यूतं चैतन्यं साक्षात्कृत्य आत्मकल्याणमभिकांक्षति।

रुद्राष्टाध्यायां परिणतप्रज्ञः आर्षः कविः विविधैः मन्त्रैः विराट् पुरुषं स्तौति।नमकाध्याये प्रतिरूपं शिवस्य स्मृत्वा 'नमस्ते रुद्रमन्यव इत्यारभ्य आसमाप्तिं रुद्रं प्रणमति।शतरुद्रियं नमनं कृत्वा चमकाध्याये 'वाजश्च मे, प्रसवश्च मे......अश्मा मे , मृत्तिकाच मे....... अग्निश्च मे, घर्मश्च मे.......गर्भाश्च मे वत्साश्च मे............एकाच मे तिस्रश्चमे (3 यजुर्वेद रुद्राष्टाध्यायी चमकाध्यायः) इत्यन्तं सर्वमपि लोकेऽभीष्टं भक्ताय कल्पतां देव इति प्रार्थ्यते।अनेन शतरुद्रिययज्ञेन ब्रह्मलोके महीयते। भगवत्परायणो भक्तो यदातितीव्रेण श्रद्धायुक्तेन मनसा भगवन्तं स्मरति , तदा भगवानपि व्यग्रचित्तः सन् स्वकीयं भक्तं द्रष्टुकामः तस्मै स्पृहयति।भगवता स्वयमेवोक्तं श्रीमद् भागवते–
अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विजः।साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः।( 4 श्रीमदभागवतपुराणम् 9.4.63)
श्रीमद् भगवद्गीतायामप्युक्तम्–ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।(5 श्रीमद्भगवद्गीता 4.11 )

आचार्य–पुष्पदन्तप्रणीतं शिवमहिम्नस्तोत्रम् स्तोत्रसाहित्ये सुपरिचितं सुप्रथितं च वर्तते। वस्तुतः महेश्वरस्य शिवस्य स्तवनं नाल्पप्रयाससाध्यं वर्तते। आशुतोषोऽपि भगवान् नित्यं समाधिमास्थाय प्रसंख्यानपरो भवति।

महादेवं प्रसादयितुं न कश्चिदकृतपुण्यो जनः प्रभवति। अपारं हि शिवस्य महिमानं जानन्नपि शिवभक्तः स्वात्मसंतुष्टये तं स्तौतुं प्रवर्तते। तदुच्यते कविना–

असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रे।
सुरतरुवरशाखा लेखनी पत्रमूर्वी।
लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश पारं न याति। ( 6 शिवमहिम्नि 32)

महाकवेः कालिदासस्य प्रबन्धानां व्याख्याता मल्लिनाथोऽपि नोत्सहते महाकवेः गिरां सारं शब्दैरभिव्यक्तुम। अस्य लेखनी कालिदासमवगन्तुमादौ सरस्वतीं ब्रह्माणं च प्रार्थयते।आत्मनः असामर्थ्यं स्वीकृत्य भगवदाश्रयमन्तरेण न किमपि साध्यं भवतीति मत्वा मल्लिनाथो वदति–

कालिदासगिरां सारं कालिदाससरस्वती।
चतुर्मुखोऽथवा ब्रह्मा विदुर्नान्ये तु मादृषाः। ( 7 कालिदासीय ग्रन्थेषु मंगलारणे मल्लिनाथः)

ईशस्तवनेन न केवलं पारमार्थिकोऽभ्युदयो भवति, अपितु ऐहिको, दैहिको वा व्याधिरपि निरस्यते। मयूरभट्टस्य शारीरको व्याधिः सूर्यशतकेन स्तोत्रेण सर्वतोपगतः। स हि शतश्लोकैः भगवन्तं सूर्यनारायणमभिष्टूय कुष्ठरोगान्मुक्तो जातः।गद्यकर्तृणां निकषायमाणः सर्वेषां कवीनां ललामभूतो बाणभट्टः चण्डीशतके भगवत्याः दुर्गायाः प्रशस्तिं गीयमानः , अक्षय्यं काव्यनैपुण्यं समासादयति। अविकलेन मनसा स्तुता भगवती भवानी महाकवेरखिलमपि दुरितमपनीय तस्य प्रातिभं चक्षुरुन्मीलयति।

जगत्यस्मिन् अद्वैतवेदान्तस्य प्रतिष्ठापकआदिशंकराचार्यः परमार्थतः अद्वैतस्योपासकोऽपि लोके नानाविधदेवतानां स्तोत्राणि प्रणीय प्रसिद्धिमलभत। वस्तुतः सगुणोपासनामन्तरेण न निर्गुणस्य परब्रह्मणः प्राप्तिः संभवति। अतः आचार्येण श्रीविष्णोः, श्रीरामस्य, शिवस्य, गणपतेः, देव्याः, हनूमतः सूर्यादीनां च अतिरमणीयानि स्तोत्राणि विरचितानि।प्रातरुत्थाय सर्वप्रथमं हृदि स्फुरन्तमात्मतत्वं स्मृत्वा प्रणम्य च आह्निकं प्रारम्भणीयम्। तदनन्तरं विष्णु–शिव–रामादीनां स्मरणं वन्दनं च विधाय नित्यकर्मणि प्रवृत्तो भवेदिति ऋषीणामादेशः। शंकराचार्यस्याखिलमपि स्तोत्रसाहित्यं दैदीप्यमानं रत्नमिव सहृदयानां मनसि चकास्ते।तत्र सांगीतिकं माधुर्यमपि सर्वेषां चेतांसि आवर्जयति। मनोहरंताललयसमन्वितं संगीतं कस्य मनो न हरति।भगवतः शंकराचार्यस्य चर्पटपञ्जरी नामकं स्तोत्रं विश्वस्मिन् नितरां लोकप्रियं वर्तते। विपत्तिबहुलेऽस्मिन् जगति आचार्यस्य स्तोत्राणि निशम्य प्रगीय च अशान्तमपि चित्तं शमं लभते, मनसि अलौकिकमानन्दं च लभ्यते।

सौन्दर्यलहर्यां भगवत्याः अलौकिकमनिर्वचनीयं च सौन्दर्यं वीक्ष्य कस्य चेतो न द्रवति? देव्याः विगलितवेद्यान्तरं लावण्यं रामणीयकं चित्तस्यान्तःस्तलं स्पृशति। काव्यलालित्येन सह तन्त्रशास्त्रीयमपि गूढतमं रहस्यमत्रोद्घाटितमस्ति। अशरणशरण्यां देवीं प्रपद्य तच्चरणारविन्दं प्राप्य न किमपि वक्तुं पारयति जनः। शब्दातीतः खलु देव्याः कृपाप्रसादः।स्वकीयं दौर्बल्यं कार्पण्यं च उरीकृत्य भक्तेन स्वात्मा देव्याः पुरतः समर्पितः। तदुच्यते–

भवानि स्तोतुं त्वां प्रभवति चतुर्भिर्न वदनैः
प्रजानामीशानस्त्रिपुरमथनः पञ्चभिरपि।
न षड्भिः सेनानी दशशतमुखैरप्यहिपति
स्तदान्येषां केषां कथय कथमस्मिन्नवसरः।( 8 आनन्दलहर्याम् 1)

अनिर्वचनीयं खलु देव्याः सौन्दर्यम्। तस्याः रूपमाधुर्यं चित्रयितुमशक्तापि कवेर्लेखनी नात्मानं निवारयितुं शक्नोति।प्रतीयमानं सौन्दर्यं हि केवलमनुभूतिविषयमेव न तद् शब्दवाच्यम्। देव्याः रामणीयकं लावण्यं वा चेतसि

दिव्यं किमप्यनुभावयति येन स्वात्मा विगलितवेद्यान्तर इव परब्रह्मणि लीयमान इव तिष्ठति। देव्याः ललितायाः शृङ्गारं वीक्ष्य कस्य चेतो न द्रवति? पश्यतां पद्यस्यास्य शब्दसम्भारः–

मुखे ते ताम्बूलं नयनयुगले कज्जलकला
ललाटे कश्मीरं विलसति गले मौक्तिकलता।
स्फुरत् काञ्ची शाटी पृथुकटितटे हाटकमयी
भजामि त्वां गौरीं नगपतिकिशोरीमविरतम्।( 9 आनन्दलहर्याम् 3)

भारतीयवाङ्मयेषु स्तोत्राणां नाल्पीयसी संख्या। कुलशेखरस्य मुकुन्दमालास्तोत्रम् यमुनाचार्यस्य स्तोत्ररत्नम्, कृष्णकर्णामृतं च, लीलांशुकस्य लक्ष्मीसाहस्री (अत्र सहस्रपद्यैः भगवत्याः लक्ष्मीदेव्याः स्तवनं कृतम्)सर्वाण्येतानि स्तोत्राणि संस्कृतस्य विलक्षणोऽक्षययश्च निधिः। विष्णुभक्तानां हि स्वकीयमाराध्यं स्तौतुमस्खलितो वाक्प्रसरो दृश्यते। पण्डितराजो जगन्नाथः शास्त्रपण्डितोऽपि लहरीपञ्चकमाध्यमेनात्मनः इष्टदेवतां समाराधयति । 1–गङ्गालहरी2–अमृतलहरी 3–यमुनालहरी 4–लक्ष्मीलहरी 5–करुणालहरी इति पञ्चधा लहरीभिः स्तवनसागरे तरंगितः पण्डितराजस्यात्मा । कालिन्द्यास्तटे विहरन्तं श्रीकृष्णं गोपिकामुखेन स्तूयमानः कविराह–

स्मृतापि करुणातपं करुणया हरन्ती नृणाम्
अभंगुरतनुत्विषां वलयिता शतैर्विद्युताम्।
कलिन्दगिरिनन्दिनी तटसुरद्रुमालम्बिनी
मदीयमतिचुम्बिनी भवतु कापि मन्दाकिनी। (10 यमुनालहरी 1 )

शैवस्तोत्रेषु उत्पलदेवस्य शिवस्तोत्रावलिः, जगद्धरभट्टस्य स्तुतिकुसुमाञ्जलिश्च स्तोत्रसाहित्ये प्रथिततरौ ग्रन्थौ स्तः।भगवतः शिवस्य कण्ठे स्थितं महाकालकूटमपि विषं भक्ताय रोचते। भगवत्प्रसादरहितममृतमपि तस्मै अग्राह्यं भवति।काश्मीरक श्रीउत्पलदत्तेन स्पष्टमुक्तम्–

कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम्।
अप्युपात्तममृतं भवदवपुर्भेदवृत्ति यदि मे न रोचते।(11परमेश्वरस्तोत्रावल्याम् 13स्तोत्रम् )

भारतीय–दर्शनेषु तादत्म्यमापन्नाः जैनाः बौद्धाश्च स्वस्वोपास्यानां गुणानुवदमाध्यमेन भारतीयं स्तोत्रवाङ्मयं पुपुषुः।मानतुङ्गाचार्यस्य भक्तामरस्तोत्रम्, सिद्धसेनदिवाकरस्य कल्याणमन्दिरस्तोत्रम्, श्रीवादिराजस्य एकीभावस्तोत्रम्, सोमप्रभाचार्यस्य सूक्तिमुक्तावलिः, जम्बूगुरोः जिनक्षतकादयष्च सुतरां प्रसिद्धि मापन्नाःशून्यवादस्य प्रतिष्ठापकः नागार्जुनः चतुःस्तवम् नामकं स्तोत्रं विलिख्य देशान्तरेष्वपि ख्याति मापन्नः। वेदान्तदेशिकेन पञ्चविंशतिसंख्यातोऽप्यधिकानिस्तोत्राणि विरचितानि। कविः सोमेश्वरः स्वकीये काव्यत्रये (कीर्तिकौमुदी, उल्लासराघवम्, शमशतकम् ) स्वाश्रयदातुः भगवतः परमेश्वरस्य च स्तवमतिमनोहारिभिः पद्यैः करोति। नीलकण्ठदीक्षितस्य योग्यतमः विषयो रामभद्रो दीक्षितः शार्दूलविक्रीडितमाश्रित्य रामचापस्तवम् विलिख्य परां प्रसिद्धिमुपगतः।पं.शूरनारायणेन विरचितम् सुदर्शनशतकमपि विदुषां हृदयावर्जकम्। श्रीनिवासाचार्येण विरचितः जानकीचरणचामरः सर्वेशामनुभूतिप्रवणानां चित्तमाकर्षयति। मधुसुसूदनसरस्वती–कृता आनन्दमन्दाकिनी भगवतो विष्णोः सुतरां मनोहरं वर्णनं पुरस्कृत्य भक्तानां चेतांस्यावर्जयति।

श्रीकृष्णगोपिकानां परस्परं प्रेमाणं रासक्रीडां चाभिलक्ष्य माधवभट्टेनातिरमणीयः प्रसङ्गः चित्रितः। नारायणभट्टस्य नारायणीयम्, अप्पयदीक्षितस्य वरदराजस्तवः, उभावपि स्तोत्रग्रन्थौ स्तोत्रसाहित्ये अनितरसाधारणं महत्वं दधाते। अत्र काञ्ची पुरस्य भगवतो वरदराजस्य स्तुतिः गीयते कविना। शक्तिततत्वस्य परमोपासकः ऋषिः दुर्वासा नाम आसीत्।तेन भूयांसि शक्तिस्तोत्राणि प्रणीय त्रिपुरा सम्प्रदायस्य क्रोधभट्टारक इत्युपाधिर्लब्धः इति साहित्यिकेषु प्रसिद्धः। अस्यैव पर–शम्भु–महिम्नः स्तवः शिवभक्तेषु प्रसिद्धः।अनेन रचितं

ललितास्तवरत्नम् ललितादेव्याः स्तुतिपरं ग्रन्थरत्नम्।कश्मीरदेशस्य शिरोभूषणायमानो महाकविः कल्हणः राजतरंगिणीकारः अर्धनारीश्वरस्य स्तोत्रं प्रणिनाय।अत्र पार्वतीपरमेश्वरौ अतिप्रासादिकतया प्रस्तुतौ।

पञ्चस्तवी नामकं स्तोत्रपञ्चकं केनचित् कलिदास इति नामधारिणा कविना विरचितम्। अस्मिन् ग्रन्थे 1–लघुस्तुतिः 2–घटस्तवः 3–चर्चास्तुतिः 4–अम्बास्तुतिः 5–जननीस्तवः इति पञ्चविधं स्तोत्रं समुपलभ्यते। गुरुगौडपादाचार्यः सुभगोदयस्तुतिं लिलेख। वस्तुतः स्तुतिगन्थानां विवरणं संकलनं वा नात्राभीष्टम्। यतो हि अनन्ताः खलु स्तुतयः।स्तुतिग्रन्थानां परिगणनं कर्तुमल्पीयसा कालेन अस्मिन् निबन्धे तेषां नामनिर्देशोऽपि कर्तुं न शक्यते। पुरातनम् ऋग्वेदकालीनं साहित्यमारभ्य ऐदंयुगीनं वाङ्मयमव्याहतरूपेण भगवद्विषयकैः स्तुतिवचनैः आप्यायितम्।

इदमत्रावधेयं यत् स्तुतिकाव्यानि न केवलं देवताविषयकं स्तवनमेवानुबध्नाति, अपितु महतां विभूतीनां ऋषिकल्पानां सत्पुरुषाणामुदात्तचरितमाश्रित्य बहूनि स्तोत्राणि विरचितानि। कवीन्द्रचन्द्रोदये, कवीन्द्राचार्यमनुलक्ष्यानेकैः कविभिः स्तुतिमयानि पद्यान्युपहारीकृतानि।महाकविं कालिदासं विषयीकृत्य अष्टाविंशतिकाः कवयः ''कालिदास प्रतिभायाम्' (ग्रन्थोऽयं श्रीधर भास्कर वर्णेकर महोदयेन सम्पादितः।) कविवर्याणां काव्यनैपुण्यमभिव्यक्तम्। ब्रह्मलीनैः श्रीमद्भिः श्रीधर भास्कर वर्णेकर–महोदयैः 'कालिदास–रहस्यम्' इति ग्रन्थे कालिदासस्य प्रातिभं चक्षुः साक्षात्कृत्य अतिमधुराभिर्वचोभिः महाकवेरात्माप्रकटीकृतः।

अन्ते ' जयतु जयतु गीता वाङ्मयी कृष्णमूर्तिः ' इति पादान्तं स्तोत्रं प्रगीय प्रज्ञाभारती इत्यभिधानेन भूषितः वर्णेकरमहोदयः स्तोत्रवाङ्मये विशिष्टं महत्वं धत्ते।

**–ःसन्दर्भः–**

1 मम्मट कृत काव्यप्रकाशः दशमोल्लासः काव्यलिंगालंकारः
2 ऋग्वेदः अग्निसूक्तम् 1.1
3 यजुर्वेद रुद्राष्टाध्यायी चमकाध्यायः
4 श्रीमदभागवतपुराणम् 9.4.63)
5 श्रीमद् भगवद्गीता 4.11
6 शिवमहिम्नि 32
7 कालिदासीय ग्रन्थेषु मंगलारचरणे मल्लिनाथः)
8 आनन्दलहर्याम् 1
9 आनन्दलहर्याम् 3)
10 यमुनालहरी 1
11परमेश्वरस्तोत्रावल्याम् 13स्तोत्रम्